॥ ढुण्ढिस्वरूपवर्णनस्तोत्रम् ॥

श्रीगणेशाय नमः ।
जैमिनिरुवाच ।
न वक्तुं शक्त्ये राजन् केनापि तत्स्वरूपकम् ।
नोपाधिना युतं ढुण्ढिं वदामि शृणु तत्वतः ॥ १॥

अहं पुरा सुशान्त्यर्थं व्यासस्य शरणं गतः ।
मह्यं सङ्कथितं तेन साक्षान्नारायणेन च ॥ २॥

तदेव त्वां वदिष्यामि स्वशिष्यं च निबोध मे ।
यदि तं भजसि ह्यद्य सर्वसिद्धिप्रदायकम् ॥ ३॥

देहदेहिमयं सर्वं गकाराक्षरवाचकम् ।
संयोगायोगरूपं यद् ब्रह्म णकारवाचकम् ॥ ४॥

तयोः स्वामी गणेशश्च पश्य वेदे महामते ।
चित्ते निवासकत्वाद्वे चिन्तामणिः स कथ्यते ॥ ५॥

चित्तरूपा स्वयं बुद्धिर्भ्रान्तिरूपा महीपते ।
सिद्धिस्तत्र तयोर्योगे प्रलभ्येत् तयोः पतिः ॥ ६॥

द्विज उवाच ।
शृणु राजन् गणेशस्य स्वरूपं योगदं परम् ।
भुक्तिमुक्तिप्रदं पूर्णं धारितं चेन्नरेण वै ॥ ७॥

चित्ते चिन्तामणिः साक्षात्पञ्चचित्तप्रचालकः ।
पञ्चवृत्तिनिरोधेन प्राप्यते योगसेवया ॥ ८॥

असम्प्रज्ञातसंस्थश्च गजशब्दो महामते ।
तदेव मस्तकं यस्य देहः सर्वात्मकोऽभवत् ॥ ९॥

भ्रान्तिरूपा महामाया सिद्धिर्वामाङ्गसंश्रिता ।
भ्रान्तिधारकरूपा सा बुद्धिश्च दक्षिणाङ्गके ॥ १०॥

तयोः स्वामि गणेशश्च मायाभ्यां खेलते सदा ।
संभजस्व विधानेन तदा संलभसे नृप ॥ ११॥

